चतुर्भागाङ्कितं कुर्यात् शाखाविस्तारमानकम्।
मध्ये द्विभागिकं कुर्यात् स्तम्भं पुरुषसंज्ञकम् ॥५७॥
त्रिसंज्ञका भवेत् शाखा पार्श्वतो भाग भागिका।
निर्गमे चैकभागेन रूपस्तम्भः प्रशस्यते ॥५८॥
एकांशं सार्द्धभागञ्च पादोनद्वयमेव च।
द्विभागं निर्गमे कुर्यात् स्तम्भं द्रव्यानुसारतः ॥५९॥
पेटके विस्तरं कार्यं प्रवेशस्तु युगांशकम्।
कोणिका स्तम्भमध्ये तु भूषणार्था हि पार्श्वतः ॥६०॥
द्वारदैर्घ्यचतुर्थांशे द्वारपालो विधीयते।
स्तम्भं शाखादिकं शेषे त्रिशाखावद्विभाजयेत् ॥६१॥
इति त्रिशाखम्।
पत्रशाखा च गन्धर्वा रूपस्तम्भतृतीयके।
चतुर्थी स्वल्पशाखा च सिंहशाखा च पञ्चमी ॥६२॥
इति पञ्चशाखा।
प्रथमा पत्रशाखा च गन्धर्वा रूपशाखिका।
चतुर्थी स्तम्भशाखा च रूपशाखा च पञ्चमी ॥६३॥
षष्ठी तु शल्यशाखा च सिंहशाखा च सप्तमी;
स्तम्भशाखा भवेन्मध्ये रूपशाखाग्रसूत्रतः ॥६४॥
इति सप्त शाखाः।
पत्रगन्धर्वसंज्ञा च रूपस्तम्भतृतीयके।
चतुर्थी शल्यशाखा च गन्धर्वा तथ पञ्चमी ॥६५॥
रूपस्तम्भस्तथा षष्ठी रूपशाखा ततःपरा।
शल्यशाखा च सिंहाख्या मूलकर्णेन मिता ॥६६॥
यस्य देवस्य या मूर्तिः सैव कार्योत्तराङ्गके।

शाखायाञ्च परीवारो गणेशश्चोत्तराङ्गके ॥६७॥
इति नवशाखा ।

इति प्रासादमण्डने वास्तुशास्त्रे पीठमण्डोवरगर्भगृह उदुम्बरप्रमाणं तृतीयोऽध्यायः ॥३॥

---

## अथ चतुर्थोऽध्यायः

द्वारोच्छ्रायोऽष्टनवधा भागमेकं परित्यजेत् ।
शेषे त्र्यंशे द्विभागार्चा त्र्यंशोना द्वारतोऽथवा ॥१॥
द्वारदैर्घ्ये तु तिथ्यंशो तिथिशक्रकलांशकैः ।
ऊर्ध्वार्चा आसनस्था च मनुविश्वार्कभागतः ॥२॥
चतुरस्त्रीकृते क्षेत्रे दशभागविभाजिते ।
भित्तिर्द्विभागा कर्तव्या षट्भागं गर्भमन्दिरम् ॥३॥
तृतीयांशेन गर्भस्य प्रासादे प्रतिमोत्तमा ।
मध्यमा स्वदशांशोना पञ्चांशोना कनीयसी ॥४॥
आयभागैर्भजेद्द्वारमष्टमं तूर्ध्वतस्त्यजेत् ।
सप्तमे सप्तमे दृष्टिर्वृषे सिंहे ध्वजे शुभा ॥५॥
षष्टभागस्य पञ्चांशो लक्ष्मीनारायणादिदृक् ।
शयनार्चेशलिङ्गानि द्वारार्धं न व्यतिक्रमेत् ॥६॥
पट्टाधो यक्षभूताद्याः पट्टाग्रे सर्वदेवताः ।
तदग्रे वैष्णवं ब्राह्मं मध्ये लिङ्गं शिवस्य च ॥७॥
इति प्रतिमाप्रमाणदृष्टिपदस्थापनम् ।

छाद्यस्योर्ध्वे प्रहारः स्यात् शृङ्गे शृङ्गे तथैव च
प्रासादशृङ्गशृङ्गेषु अधोभागे तु छाद्यकम् ॥८॥

छाद्य भागद्वय सार्द्ध सार्द्धभागं च पालवम् ।
मुण्डलीकं भागमेकं भागेन तिलकस्तथा ॥९॥
मूलकर्णे रथादौ वा एकद्वित्रिक्रमान्न्यसेत् ।
निराधारे मूलभित्तौ साधारे भ्रमभित्तिषु ॥१०॥
उरुश्रृङ्गाणि भद्रे स्युरेकादिग्रहसंख्यया ।
त्रयोदशोर्द्धे सप्तार्द्धे लुप्तानि चोरुश्रृङ्गकैः ॥११॥
रेखामूलेन दिग्भागं कुर्यादग्रे षडंशकम् ।
षड्बाह्ये दोषदं प्रोक्तं पञ्चमध्ये न शोभनम् ॥१२॥
सपादं शिखरं कार्यं सकर्णं शिखरोदयम् ।
सपादकर्णयोर्मध्ये उदये पञ्चविंशतिः ॥१३॥
प्रोक्ता रेखा कलाभेदैर्वलणैः पञ्चविंशतिः ।
पञ्चादिनवयुग्मान्तं खण्डानि तेष्वनुक्रमात् ॥१४॥
अंशवृद्ध्या कलाः कार्या दैर्घ्ये स्कन्धेऽपि तत्समाः ।
अष्टादावष्टषष्ठ्यन्तं चतुर्वृद्ध्या तु षोडश ॥१५॥
दैर्घ्यतुल्याः कलाः स्कन्धे एकहीनास्तु षोडश ।
ऊर्ध्वा अष्टदशांशाः स्युस्तिर्यक्षोडश एवच ॥१६॥
चक्रेऽस्मिन्संभवन्त्येव रेखाणां षट्शतद्वयम् ।
त्रिखंडात् खण्डवृद्धिश्च यावदष्टादशैव हि ॥१७॥
एकैकांशे कलाष्टौ च समाचारस्तु षोडश ।
द्वितीयप्रथमे खण्डे कलाष्टौ द्वितीये नव ॥१८॥
तृतीये दशखंडेषु शेषेषूर्ध्वेष्वयं क्रमः ।
अष्टदिक्षु सुभागैश्च त्रिखण्डा तृतीया भवेत् ॥१९॥
अनेन क्रमयोगेन कोष्ठानङ्कैः प्रपूरयेत् ।
रेखाणां जायते संख्या षट्पञ्चाशच्छतद्वयम् ॥२०॥

सव्यास शिखरं कार्यं सकर्णं शिखरोदयम् ।
व्यासस्य कर्णयोर्मध्ये रेखाः स्युः पञ्चविंशतिः ॥२१॥
विंशद्भिर्विभजेद्भागैः शिलातः कलशान्तकम् ।
मण्डो वरोऽष्टसार्द्धाष्टनवांशैः शिखरोदयम् ॥२२॥
रेखामूलस्य विस्तारे पद्मकोशं समालिखेत् ।
चतुर्गुणेन सूत्रेण सपादः शिखरोदयः ॥२३॥
स्कन्धकोशान्तरे सप्तभक्ते ग्रीवात्रिभागतः ।
सार्धमामलसारश्च पद्मपत्रन्तु सार्द्धकम् ॥२४॥
त्रिभाग उच्चकलशो द्विभागं तस्य विस्तरम् ।
प्रासादस्याष्टमांशेन पृथुत्वकलशाण्डके ॥२५॥
छाद्यनः स्कन्धपर्यन्तमेकविंशतिभाजिते ।
अङ्कदिग्रुद्रसूर्यांशैर्विश्वांशैस्तस्य चोच्छ्रयः॥२६॥
शुकनासस्य संस्थानं छाद्योर्ध्वे पञ्चधा मतम् ।
एकत्रिपञ्चसप्ताङ्कसिंहस्थानानि कल्पयेत् ॥२७॥
द्वारस्य दक्षिणे वामे कपिली षड्विधा मता ।
तदूर्ध्वे शुकनासा स्यात् सैव प्रासादनासिका ॥२८॥
प्रासादो दशभागश्च द्वित्रिवेदांशसंमिता ।
प्रासादेनार्द्धपादेन त्रिभागनाथ निर्मिता ॥२९॥
शृङ्गोरुशृङ्गप्रत्यङ्गैः खण्डकान् गणयेत्सुधीः ।
तवाङ्गं तिलकं कर्णे कुर्यात्प्रासादभूषणम् ॥३०॥
दशांशे शिखरेमूले अग्रे तत्र नवांशके
सार्धांशको रथौ कोणौ द्वौशेषं भद्रमिष्यते ॥३१॥
रथयोरुभयोर्मध्ये वृत्तमामलसारकम् ।

उत्सेधो विस्तरार्धेन चतुर्भागर्विभाजयेत् ॥३२॥
ग्रीवा चामलसारश्च पादोनश्च सपादकम् ।
चन्द्रिकाभागमानेन भागेनामलसारिका ॥३३॥
घृतपात्रं न्यसेन्मध्ये ताम्रपात्रं सुवर्णजम् ।
सौवर्णं पुरुषं तत्र तुली?पर्यङ्कशायिनम् ॥३४॥
प्रमाणं पुरुषं सार्द्धाङ्गुलं कुर्यात्करं प्रति ।
त्रिपताकं करे वामे हृदिस्थं दक्षिणं करम् । ३५॥
प्रासादपृष्ठदेशे तु दक्षिणे प्रतिरथके ।
ध्वजाधारस्तु कर्तव्य ईशाने नैर्ऋतेऽथवा ॥३६॥

इति प्रासादस्योर्द्ध्व लक्षणम् ।

क्षीरार्णवसमुत्पन्नं प्रासादस्याग्रजातकम् ।
माङ्गल्येषु च सर्वेषु कलशं स्थापयेद्बुधः ॥३७॥
पूर्वोक्तमानतो ज्येष्ठः षोडशांशाधिको भवेत् ।
ग्रीवापीठं भवेद्भागं त्रिभागेनाण्डकं तथा ॥३८॥
कर्णिकाभागतुल्ये च त्रिभागं बीजपूरकम् ।
एकांशमग्रे द्वौ मूले वह्निवेदांशकर्णिके ॥३९॥
ग्रीवा द्वौ पीठमर्धं द्वौ षड्भागं विस्तराण्डकम् ।

इति कलशः ।

दण्डस्ततृतीयांशेन शिलान्तकलशान्तकम् ॥४०॥
मध्योऽष्टांशेन हीनोऽसौ ज्येष्ठपादोऽन्यकन्यसः ।
प्रासादपृथुमानेन दण्डो ज्येष्ठः प्रकीर्तितः ॥४१॥
मध्यो हीनो दशांशेन पञ्चमांशेन कन्यसः ।
एकहस्ते तु प्रासादे दण्डः पादोनमङ्गुलम् ॥४२॥
कुर्यादर्धाङ्गुलं वृद्धिर्यावत्पञ्चदशाहतम् ।

सुवृत्तः सारदारुश्च ग्रन्थिकण्टकवर्जितः ॥४३॥
पर्वभिर्विषमैः कार्यःसमग्रन्थिः सुखावहः ।
दण्डदीर्घषडंशेन मर्कट्य ? र्धेनविस्तरः ॥४४॥
अर्धचन्द्राकृतिः पार्श्वे घण्ट द्वे कलशस्तथा ।
ध्वजो दण्डप्रमाणेन धैर्घ्येऽष्टांशेन विस्तरे ॥४५॥
नानावस्त्रविचित्राणि त्रिपञ्चाग्रशिखोपमा ।
पुरे च नगरे कोट्टे रथे राजगृहे तथा ॥४६॥
वापीकूपतडागेषु ध्वजाः कार्याः सुशोभनाः ।
निष्पन्नं शिखरं दृष्ट्वा ध्वजहीनं न कारयेत् ॥४७॥
असुरा वासमिच्छन्ति ध्वजहीने सुरालये ।
ध्वजोच्छ्रायेण तुष्यन्ति देवाश्च पितरस्तथा ॥४८॥
दशाश्वमेधिकं पुण्यं सर्वतीर्थधरादिकम् ।
पञ्चशत्पुर्वतः पश्चादात्मानश्च तथाधिकम् ॥४९॥
शतमेकोत्तरं सोऽपि तारयेन्नरकार्णवात

इति ध्वजलक्षणपुण्याधिकारः ।

इति प्रतिमादृष्टिपदस्थानशिखरध्वज -
कलशलक्षणाधिकारश्चतुर्थोऽध्यायः ॥४॥

---

## अथ पंचमोऽध्यायः ।

नानाविधमिदं विश्वं विचित्रं येन सूत्रितम् ।
सूत्रधारः स एव स्यात् सर्वेषां पालनक्षमः ॥१॥
न्यूनाधिकं प्रसिद्धञ्च यत्किञ्चिन्मण्डनोदितम् ।
विश्वकर्मप्रसादेन शिल्पिभिर्मन्यतांवचः ॥२॥

चतुर्भागं समारभ्य यावत्स्यपोत्तरशतम् ।
भागसंख्येति विख्याता फालना कर्णबाह्यतः ॥३॥
अष्टोत्तरशतं भेदा अंशवृद्ध्या भवन्ति ते ।
समांशैर्विषमैः कार्या नन्दभेदैश्च फालनाः ॥४॥
एकस्यापि तलस्योर्ध्वे शिखराणि बहून्यपि ।
नामानि जातयस्तेषामूर्ध्वमार्गानुसारतः ॥५॥
दशहस्तादधो नास्ति प्रासादो भ्रमसंयुतः ।
नवाष्टदशभागेन भ्रमो भित्तिर्विधीयते ॥६॥
वैराज्यश्चतुरस्रस्तु चतुर्द्वारचतुष्किकः ।
प्रासादो ब्रह्मणः प्रोक्तो धीमता विश्वकर्मणा ॥७॥
सपादं शिखरं कार्यं घण्टाकुलिशभूषितम् ।
चतुर्भिः शुकनासैस्तु सिंहकर्णैर्विराजितम् ॥८॥
एकद्वारं भवेत्पूर्वं द्विद्वारं पूर्वपश्चिमम् ।
त्रिद्वारे मध्यजं द्वारं दक्षिणास्यं विवर्जयेत् ॥९॥
चतुर्द्वारं चतुर्दिक्षु शिवब्रह्मजिनालये ।
होमशाला चतुर्द्वारा क्वचिद्राजगृहे तथा ॥१०॥
वैराज्यादिसमुत्पन्नाः प्रासादा ब्रह्मणार्चिताः ।
एकत्रिपञ्चसप्ताङ्कशाखान्तैः पञ्चविंशतिः ॥११॥
चतुर्भक्ते भवेत् कोणो भागो भद्रं द्विभागिकम् ।
भागार्धं निर्गमं भद्रे प्रकुर्यान्मुखभद्रकम् ॥१२॥
शृङ्गमेकं भवेत् कर्णे द्वे द्वे भद्रे च नन्दनम् ।
इति नन्दनम् । तथाचोक्तम्
मुखभद्रे यतिभद्रमुद्गमो रथिकोपरि ॥१३॥

कर्णशृङ्गे सिंहकर्णं सिंहनामा स उच्यते ।
देवानां तु प्रकर्तव्यं सिंहस्तत्रैव शाश्वतः ॥१४॥
तुष्यते गिरिजा तस्य सौभाग्यधनपुत्रकैः ।
रथिकां सिंहकर्णं च भद्रे शृङ्गं च सिंहकः ॥१५॥
इति सिंहः ।
कर्णे शृङ्गं तु पञ्चाण्डकश्रीनन्दन उच्यते ।
अगा इति षड्भागैश्च चतुरस्रंविभाजयेत् ॥१६॥
कर्णं प्रतिरथं कुर्याद्भद्रार्द्धं भागभागिकम् ।
समनिर्गममस्माच्च भद्रं भागार्द्धनिर्गमः ॥१७॥
द्वे द्वे कर्णे तथा भद्रे चैकं च प्रतिरथ्यकम् ।
मन्दिरं तृतीयं भद्रमलयोर्भद्रजं त्यजेत् ॥१८॥
प्रत्येकं तिलकं कुर्यात् प्रतिरथ्ये विमानकः ।
भद्रोरुशृङ्गवैशालप्रतिरथ्ये सुभूषणः ॥१९॥
इति पञ्चाङ्गाः पञ्च ।
चतुरस्रेऽष्टभिर्भक्ते कर्णं प्रतिरथं रथम् ।
भद्रार्धं भागभागं च भागार्धेन विनिर्गमम् ॥२०॥
वारिमार्गान्तरयुता रथाश्च तुल्यनिर्गमाः ।
शृङ्गयुग्मे च तिलकं कर्णे द्वे प्रतिरथ्यकः ॥२१॥
एकं चोपरथे भद्रे त्रीणि त्रित्रिचतुर्दिशम् ।
शिखरं पञ्चविस्तारं महेन्द्रो राज्यदो नृणाम् ॥२२॥
कर्णे शृङ्गत्रयं शेषं पूर्ववद्रत्नशीर्षकम् ।
त्यक्त्वैकशृङ्गभद्रस्य मतालम्बं न कारयेत् ॥२३॥
मस्तके तस्य चछाद्यस्य शृङ्गयुग्मं प्रदापयेत् ।
सितशृङ्गस्तदा नाम ईश्वरस्य सदा प्रियः ॥६१॥

तिलकं चोपरथ्य तु भूधरो नाम नामतः ।
छाद्यशृङ्गे तु तिलकं नाम्ना भुवनमण्डनः ॥२४॥
शृङ्गद्वयं चोपरथे तिलकं कारयेत् सुधीः।
त्रैलोक्यविजयो भद्रशृङ्गे न क्षितिवल्लभः ॥२५॥
इति सप्ताङ्गः ।
दशभागकृते क्षेत्रे भद्रार्धं भागमानतः ।
त्र्यंप्रतिरथः कर्णे भागो भागसमो भवेत् । २६॥
कर्णे प्रतिरथे भद्रे द्वे द्वे शृङ्गे प्रकारयेत्।
रथोपरथे तिलकं प्रत्यङ्गं च रथोपरि ॥२७॥
मतालम्बयुतं भद्रं प्रासादोऽयं महीधरः।
भद्रे शृगं तृतीयं च कैलासो नाम नामतः ॥२८॥
भद्रं त्यक्त्वा रथे शृङ्गं नवमङ्गल उच्यते ।
तथा भद्रे पुनर्दद्यात् तदासौ गन्धमादनः ॥२९॥
भद्रं त्यक्त्वा चोपरथे शृङ्गं सर्वाङ्गसुन्दरः ।
भद्रे दद्यात् पुनः शृङ्गे विजयानन्द उच्यते ॥३०॥
मतालम्बयुतं भद्रमुरुशृङ्गं परित्यजेत्।
शृङ्गद्वयं च च्छाद्योर्ध्वे सर्वाङ्गतिलकस्तदा ॥३१॥
उरुशृङ्गं ततो दद्यान्मतालम्बसमन्वितम् ।
महाभागस्तदा नाम सर्वकामफलप्रदः ॥३२॥
कर्णे प्रतिरथे रथे चैकं तूपरथादिषु।
मेरुश्चापि समाख्यातः सर्वदेवेषु पूजितः ॥३३॥
प्रदक्षिणात्रये स्वर्णमेरौ पुंसां च यत् फलम् ।
इष्टकाशैलजामेरुतत्फलं प्रदक्षिणाकृते ॥३४॥
वैराज्यप्रमुखा येऽत्र नागरा ब्रह्मणोदिताः ।

इति वैराज्यादिप्रासादपञ्चविंशत्यधिकारे
पञ्चमोऽध्यायः ५ ॥

---

## अथ षष्ठोऽध्यायः

केसरी सर्वतोभद्रो नन्दनो नन्दिशालकः ।
नन्दीशो मन्दरश्चैव श्रीवृक्षश्चामृतोद्भवः ॥१॥
हिमवान् हेमकूटश्च कैलासः पृथिवीजयः ।
इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ॥२॥
वैडूर्यः पद्मरागश्च वज्रको मुकुटोज्ज्वलः ।
ऐरावतो राजहंसो गरुडो वृषभध्वजः ॥३॥
मेरुः प्रासादराजश्च देवानामालयो हि सः ।
ब्रह्मविष्णुशिवार्काणामन्येषां न कदाचन ॥४॥
आद्यः पञ्चाण्डको देयः किसरी नाम नामतः ।
चतुर्णां क्रमतो वृद्धिर्यावदेकोत्तरं शतम् ॥५॥
क्षेत्रेऽष्टांशे विभक्ते तु कर्णो भागद्वयं भवेत् ।
भद्रार्धं कर्णतुल्यं च भागेनैकेन निर्गमः ॥६॥
दशांशे सार्धभागं च भद्रार्धं च प्रतिरथे ।
कर्णो द्विभागः सूर्यांशे भद्रार्धं प्रतिरथके ॥७॥
चतुर्दशविभक्ते तु कर्णोर्ध्वद्वादशांशवत् ।
भद्रपार्श्वद्वये कार्या भागभागेन नन्दिका ॥८॥
षोडशांशे प्रकर्तव्यः कर्णः प्रतिरथेऽन्तरे ।
कोणिका भागतुल्या च शेषं चतुर्दशांशवत् ॥९॥
चतुरस्रीकृते क्षेत्रे विंशत्यंशविभाजिते ।

कर्णौ द्विभागः कोणी च सार्द्धांशा पृथुविस्तरे: ॥१०॥
द्विभागस्तु प्रतिरथो नन्दिका सार्द्धभागिका।
भद्रनंदी भवेद्भागा भद्रार्धं युग्मभागिकम् ॥११॥
द्वाविंशत्यंशके नंदी भागैका भद्रपार्श्वयोः।
त्रयः प्रतिरथाः कर्णे भद्रार्धं च द्विभागिकम् ॥१२॥
एकद्वित्रि त्रिकं त्रीणि वेदाश्चत्वारि पञ्च च।
तलेषु क्रमतोऽष्टासु केऽप्याहुः शिखराणि हि ॥१३॥
अष्टादशांशभद्रस्य पाश्व द्वे द्वे च नन्दिके।
कर्तव्यैर्भागभागैश्च शेषं स्यात्षोडशांशवत् ।१४॥
शिखरं त्वेकवेदैकषट्त्रिवेदयुगद्वयम्।
तलेषु क्रमतः प्रोक्तो मूलसूत्रे पराजिते ॥१५॥
तलेष्वष्टासु विहिताः प्रासादाः पञ्चविंशतिः।
त्रयस्त्रयः क्रमेणैव चत्वारश्चाष्टमे तले ॥१६॥
त्रीणि त्रीणि स्वकीयानि द्वे द्वे परः परस्य च।
शिखराणि विधेयानि विश्वकर्मवचो यथा ॥१७॥
द्वित्र्येकषट्त्रयोऽष्टादितलेषु पञ्चसु क्रमात्।
सप्तैव सप्तमे षष्ठे शिरांसि त्रीणि चाष्टमे ॥१८॥
भेदाः पञ्चाशदेकैकं प्रोक्ताः श्रीविश्वकर्मणा।
तेनैकस्मिस्तलेऽपि स्युः शिखराणि बहून्यपि ॥१९॥
रथिकां सिंहकर्णं च भद्रे कुर्याद्गवाक्षकान्।
प्रत्यङ्गैस्तिलकाद्यैश्च शोभितं सुरमन्दिरम् ॥२०॥
प्रासादाः केसरिमुखाः सर्वदेवेषु पूजिताः।
पुरराज्ञोः प्रजादीनां कर्तुः कल्याणकारकाः ॥२१॥

इति केसर्यादिप्रासादाः पञ्चविंशतिः।

षट्त्रिंशत्करतोऽधस्ताद्यावद्धस्तचतुष्टयम् ।
विना भ्रमैर्निराधाराः कर्तव्याः शान्तिमिच्छता ॥२२॥
वास्तोः पञ्चविधं क्षेत्रं चतुरस्रमथायतम् ।
वृत्तं वृत्तायत चैवाष्टास्रं देवालयादिषु ॥२३॥
विस्तारे तु चतुर्भागमायामे पञ्चभागिकम् ।
ऊर्ध्व?तिकलशानां कुर्यात् पृष्ठयग्रे सिंहकर्णकम् ॥२४॥
वृत्तायतं प्रकर्तव्यं व्यामार्धं वामदक्षिणे ।
कर्णे भ्रामयेत् वृत्तं वृत्तं भद्राणि चाष्ट हि ॥२५॥
प्रासादो वर्तुलाष्टास्रः प्रायेणैकाण्डकः शुभः ।
कर्णे वा श्रेणयोऽण्डानां मण्डपं तत्स्वरूपकम् ॥२६॥
इति पञ्च क्षेत्राणि ।
विचित्रैरूपसंघातैर्भद्रैर्गवाक्षभूषितैः ।
वितानफालनाशृङ्गैरनेकैर्नागरा मताः ॥२७॥
पीठोपरि भवेद्वेदी पीठानि त्रीणि पञ्च च ।
पीठतो द्राविडे रेखा लताशृङ्गादिसंयुता ॥२८॥
भूमिकोपरि भूमिश्च ह्रस्वारर्के नवान्तकम् ।
विभक्तिर्दलसंयुक्ता मूर्ध्नि शृङ्गेण भूमिजा ॥२९॥
शृङ्गेणैकेन लनिता श्रीवत्सा वारिसंयुता ।
नागरा भ्रमसंयुक्ताः साधारास्ते प्रकीर्तिताः ॥३०॥
इति प्रासादानां जातयः ।
पञ्चहस्तो भवेन्मेरुरेकोत्तरशताण्डकः ।
भेदाः पञ्चोनपञ्चाशत्करवृद्ध्या भवन्ति ते ॥३१॥
हस्ते हस्ते भवेत् द्विर्द्विरण्डकानां च विंशतिः ।
एकोत्तरसहस्रं स्यात् शृङ्गाणां च शतार्द्धके ॥३२॥

केसरिप्रमुखाः कर्णे विमानं चोरुशृङ्गकम् ।
तथैव मूलशिखरं पञ्चभूमिविमानकम्॥३३॥
विमानं नागरा जातिस्तदा प्राज्ञैरुदाहृता ।
एकशृङ्गेषु शृङ्गाणि संभवन्ति बहून्यपि ॥३४॥
श्रीमेरुपृष्ठभागः स्यादेकोत्तरशताण्डकः ।
हिमशीर्षो दशांशः स्यात् युगसार्धशताण्डके॥३५॥
भागैर्द्वादशभिर्युक्तः सार्द्धद्वित्सेन?संयुतः ।
सुरवल्लभनामा तु प्रोक्तः श्रीविश्वकर्मणा ।३६॥
कोणे द्विभाग एकांशा कोणी सार्द्धप्रतीरथः ।
अर्धांशा नन्दिका भद्रे साधभागेन संमितम् ॥३७॥
त्रिशतं पञ्चसप्तत्याधिकं यस्याण्डकानि हि ।
भक्तश्चतुर्दशांशैस्तु नाम्ना भुवनमण्डनः ॥३८॥
कोणकोणी प्रतिरथो नन्दी भद्रार्धमेवच ।
द्व्येकद्व्यर्द्धांशे सार्द्धांशैश्चतुर्दशविभाजिते ॥३९॥
बाणैकवेदयुग्मांशा वेदाः कर्णादिभागतः ।
रत्नशीर्षो भवेन्मेरुः पञ्चाशतैकशृङ्गकैः ॥४०॥
गुणैकयुग्मचन्द्रादौ पुराणांशविभाजिते ।
किरणोद्भवमेरुश्च सपादः षट्शताण्डकः ॥४१॥
रामचन्द्रद्वियुग्मांशनेत्रे विंशतिभाजिते ।
नाम्ना कमलहंसः स्यात्सार्द्धसप्तशताण्डकः ॥४२॥
भागैकनिर्गमा भित्तिर्वेदभार्द्धत्रिसार्धकैः ।
द्वाभ्यां तै स्वर्णकेतुश्च पञ्चसप्ताष्टशृङ्गकैः ॥४३॥
संभ्रमो भ्रमहीनश्च महामेरुभ्रमद्वयम् ।
साधारेषु प्रकर्तव्यं भद्रे भद्राविलोकनम ॥४४॥

वेदैकरामयुग्मांशनेत्रे जिनविभाजिते ।
वृषभध्वजमेरुश्च सैकाण्डकसहस्रवान ॥४५॥
संभ्रमो भ्रमहीनश्च महामेरुभ्रमद्वयम् ।
साधारेषु प्रकर्तव्यं भद्रे भद्राविलोकनम् ॥४६॥
राज्ञश्च प्रथमो मेरुस्ततो हीनोऽन्यवर्णजः ।
विना राज्ञोऽन्यवर्णेन कृते मेरौ महाभयम् ॥४७॥
इति नवमेरुलक्षणम् ।
इति केसर्यादिप्रासादजातिलक्षणे पञ्चचत्वारिंशन्मेरु
लक्षणे षष्ठोऽध्यायः ॥६॥

---

## अथ सप्तमोऽध्यायः ।

रत्नगर्भाङ्कनं सूर्यचन्द्रतारावितानकम् ।
विचित्रं मण्डपं येन कृतं तस्मै नमः सदा ॥१॥
कर्णगूढो विलोक्यः स्यादेकत्रिद्वारसंयुताः ।
प्रासादाग्रे प्रकर्तव्याः सर्वदेवेषु मण्डपाः ॥२॥
गूढस्त्रीकास्तथा नृत्यक्रमेण मण्डपास्त्रयः ।
जिनस्याग्रे प्रकर्तव्याः सर्वेषां तु बलाणकम् ॥३॥
समं सपादं प्रासादात्सार्द्धपादोनतद्द्वयम् ।
द्विगुणं वा प्रकर्तव्याः मण्डपाः पञ्चधा मताः ॥४॥
समं सपादं पञ्चाशत्पर्यन्तं दशहस्तकम् ।
दशान्तं पञ्चतः सार्द्धद्विपादोनं चतुष्करे ॥५॥
त्रिहस्ते द्विगुणं द्व्येकहस्ते कुर्याच्चतुष्किकाम् ।
प्रायेण मण्डपं सार्द्धं द्विगुणं मत्यलिन्दकैः ॥६॥

मण्डपे स्तंभपट्टार्थमध्यपट्टानुसारतः ।
शुकनासा समा घण्टा न्यूना श्रेष्ठा नचाधिका ॥७॥
मुखमण्डपसङ्घातो पदा भित्त्यन्तरे भवेत्
न दोषःस्तंभपादाद्यैः समं वा विषमं तलम् ॥८॥
नवाष्टदशभागेषु त्रिभिश्चन्द्रावलोकनम् ।
हस्तकमङ्गुलोनं वा तदूर्ध्वं मत्तवारणम् ॥९॥
सार्द्धं पञ्चांशकैर्भक्तैः सपादं राजसेनकम् ।
सपादं त्र्यंशका वेदिर्भागेनासनपेटकम् ॥१०॥
तदूर्ध्वं सप्तसार्द्धांशे यावत्पट्टस्य पेटकम् ।
सार्द्धपञ्चांशकैः स्तंभः पादोनं भरणं भवेत् ॥११॥
भागार्धं भरणं चापि सपादं सार्धतः शिरः ।
पादो द्विभागस्तस्योर्द्धे कर्ण्यश्छाद्यकोदयः ॥१२॥
त्रिभागे ललतः श्छाद्यं तत्पेटं पट्टपेटके।
अर्धांशोर्द्धा कपोतालिर्द्विभागे पट्टविस्तरे ॥१३॥
प्रासाददशरुद्राक्षः भागेन स्तंभविस्तरः।
वेदाष्टरविविंशत्या कर्णो वृत्तस्तु पञ्चधा ॥१४॥
द्वाराग्रे स्तम्भवेद्याद्या प्रागग्रीवो मण्डपो भवेत् ।
द्विद्विस्तंम्भविवृद्ध्या च षोडशोऽयं प्रकीर्तितः॥१५॥
भित्तिः प्रासादवद्गेहे मण्डपेऽष्टविधेषु च ।
चतुरस्त्रशुभस्तस्य तथा प्रतिरथान्वितः ॥१६॥
मुखभद्रयुतो वापि द्वित्रिप्रतिरथैर्युतः ।
कर्णोदकान्तरेणाथ भद्रोदकविभूषितः ॥१७॥
कर्णतो द्विगुणं भद्रं पादोनप्रतिरथकम् ।
भद्रार्धं मुखभद्रं च शेषं षड्वसुभाजिते ॥१८॥

दलेनार्धेन पादेन दलस्य निर्गमो भवेत् ।
मूलप्रासादवद् ब्राह्मे पीठजङ्घादिमेखला ॥१९॥
गवाक्षेनान्वितं भद्रमथ जालकसंयुतम् ।
गुहश्च कर्णगुहे वा भद्रे चन्द्रावलोकनम् ॥२०॥
त्रिद्वारे चैकचक्रेऽथ मुखे कार्या चतुष्किका ।
गुहे प्रकाशके वृद्धमर्धादयकरोटकम् ॥२१॥
इत्यष्टगूढमण्डपाः ।
एकत्रिवेदसप्ताङ्कचतुष्काश्च त्रिकं त्रये ।
अध भाद्रं विभागेन पार्श्वयोरग्रतस्तथा ॥२२॥
अग्रतस्त्रिचतुष्कस्य तथा पार्श्वे द्वयेऽपि च ।
मुक्तकोणे चतुष्के द्वे इति द्वादशमण्डपाः ॥२३॥
गुहस्याग्रे प्रकर्तव्यास्तथा नानाचतुष्किका ।
चतुरस्रादिभेदेन वितानैर्बहुभिर्युता ॥२४॥
इति द्वादशमण्डपाः ।
त्रिकाग्रे रङ्गभूमाथ तत्र वै नृत्यमण्डपाः ।
सप्तविंशतिरुक्ता ये मण्डपा विश्वकर्मणा ॥२५॥
तलैस्तु विषमैस्तुल्यैः क्षणैः स्तम्भैः समैस्तथा ।
प्रथमो द्वादशस्तंभो द्विद्विस्तंभविवर्धनात् ॥२६॥
यावत्षष्टिचतुर्युक्ताः सप्तविंशतिमण्डपाः ।
क्षेत्रार्धस्य षडंशोना चैकास्राष्टास्रमुच्यते ॥२७॥
कलास्रे क्षेत्रषड्भागस्तत्षडंशेन संयुतः ।
अष्टास्रे षोडशास्ले च वृत्तं कुर्यात्तदूर्ध्वतः ॥२८॥
उदयं विस्तरार्द्धेन तं बंधंवाशभाजयेत्? ।
कर्णादर्दरिका सप्तभागेन निर्गमो तुच्छता ॥२९॥

रूपकण्ठं तु पञ्चांशं द्विभागेनात्र निर्गमम्।
विद्याधरैः समायुक्तं षोडशाष्टदिवाकरैः ॥३०॥
जिनसंख्यामितैर्वापि दन्ततुल्यैर्विराजितैः।
विद्याधरः पृथुत्वेन सप्तांशो निर्गमोदयः ॥३१॥
तदूर्ध्वे चित्ररूपाश्च नर्तक्यो नृत्यशोभिताः।
गजतालस्तु षट्सार्द्धा प्रथमा द्वितीया तु षट् ॥३२॥
तृतीया सार्धपञ्चांशा कोलानि त्रीणि पञ्चच।
मध्ये वितानं कर्तव्यं चित्रवर्णविराजितम् ॥३३॥
नाटकादिकथारूपैर्नानाकारैर्विराजितम्।
एकादशशतान्येव वितानानां त्रयोदश ॥३४॥
शुद्धसंघाटमिश्राणि क्षिप्ताक्षिप्तानि यानिच।
वितानानि विचित्राणि वस्त्रचित्रादिभेदतः ॥३५॥
तानि लोके प्रवर्तन्ते तस्मादुध्वनिलोकतः? ।
मण्डपेषु च सर्वेषु पीठान्ते रङ्गभूमिका ॥३६॥
कुर्यादूनानपादेन?चित्रपाषाणजेन च।

इति मण्डपाः।

बलाणदेवगेहाग्रे राजद्वारे गृहे पुरे।
जलाशयेऽथ कर्तव्यं सर्वेषां मुखमण्डपम् ॥३७॥
जगतीपादविस्तीर्णं पादपादेन वर्जितम्।
शालापादेन गर्भेण प्रासादेन समं भवेत् ॥३८॥
उत्तमे कन्यसं मध्ये मध्यं ज्येष्ठे तु कन्यसम्।
एकद्वित्रिचतुःपञ्चरससप्तपदान्तरे ॥३९॥
मूलप्रासादवद्द्वारं मण्डपे च बलाणके।

न्यूनाधिकं न कर्तव्यं दैर्घ्ये हस्ताङ्गुलादिकम् ॥४०॥
पेटकं चोत्तराङ्गानां सर्वेषां समसूत्रतः ।
अङ्गणा तु समं पेटं जगत्याश्चान्तराङ्गजम् ॥४१॥
जगत्यग्रे चतुष्कीयां वामनं तद्बलाणकम् ।
वामेऽथ?दक्षिणद्वाराद्वादिका मत्तवारणम् ॥४२॥
ऊर्ध्वा भूमिः प्रकर्तव्या नृत्यमण्डपसूत्रतः ।
मत्तवारणकं वेदी वितानतोरणैर्युता ॥४३॥
राजद्वारे बलाणे च पञ्च वा सप्तभूमिका ।
तद्विमानं बुधैः प्रोक्तं पुष्करं वारिमध्यतः ॥४४॥
हर्म्यराजगृहे वापि कर्तव्यं गोपुराभितः ।
एकभूमौ त्रिभूम्यन्तं गृहद्वारस्य मस्तके ॥४५॥
इति पञ्चविधबलाणकम् ।
संवर्णश्च प्रकर्तव्यं प्रथमा पञ्चघण्टिका ।
चतुर्घण्टाभिवृद्ध्या च यावदेकोत्तरं शतम् ॥४६॥
पञ्चविंशतिरित्युक्ता प्रथमा वसुभागिका ।
वेदोत्तरशतं यावत् वेदांशा वृद्धिरिष्यते ॥४७॥
भद्रार्धे रथिकार्धेन तवङ्गं वामदक्षिणे ।
अर्धोदयेन रथिका घण्टाकूटं तवङ्गकम् ॥४८॥
कलाकूटान्विना पूर्वा पञ्चभिः कलशैर्युतः ।
भागतुल्यैस्तथा सिंहैरेवमन्याश्च लक्षिताः ॥४९॥
इति मण्डपस्योर्ध्वसंवर्णाः ।

इति श्रीमण्डपबलाणकं संवर्णाधिकारः

सप्तमो ऽध्यायः ॥७॥

# अथ अष्टमोऽध्यायः।

अथ साधारणोऽध्यायः सर्वलक्षणसंयुतः ।
विश्वकर्मप्रसादेन विशेषेण प्रकथ्यते ॥१॥
मानं न्यूनाधिकं वापि स्वयम्भूबाणरत्नजे।
घटितेषु विधातव्यमर्चालिङ्गेषु शास्त्रतः ॥२॥
बहुमम सन्धिशिरो गुरुः ................ ।
स्वशल्यं पादहीनं तु तच्च वास्तु विनश्यति॥३॥
अन्यवास्तुच्युते द्रव्ये ह्यन्यवास्तुनिवेशिते।
प्रासादे न भवेत्पूजा गृहे तु न व....त्पतिः ॥४॥
स्वस्थाने संस्थितं यच्च जिर्णवास्तु शिवालयम् ।
अचाल्यं सर्वदेशेषु चालिते राष्ट्रविभ्रमः ॥५॥
वापीकूपतडागानि प्रासादभवनानि च ।
जीर्णान्युद्धरते यस्तु पुण्यमष्टगुणं लभेत् ॥६॥
तद्रूपं तत्प्रमाणं स्यात्पूर्वसूत्रं न चालयेत् ।
हीने तु जायते हानिरधिके तु धनक्षयः ॥७॥
वास्तुद्रव्याधिकं कुर्यात्काष्ठजे शैलजेऽपि वा।
शैलजे धातुजे चैव धातुजे रत्नजेऽथवा ॥८॥
पूर्वोत्तरदिश मूढमूढं पश्चिमदक्षिणे ।
तत्र मूढममूढं वा यत्र तीर्थं समाहितम् ।९॥
सिद्धायतनतीर्थेषु नदीनां सङ्गमेषु च ।
स्वयम्भूबाणलिङ्गेषु तत्र दोषो न विद्यते ॥१०॥
अव्यक्तं मृन्मयं चाल्यं त्रिहस्तान्तं तु शैलजम् ।
दारुजं पुरुषार्धं च अत ऊर्ध्वं न चालयेत् ॥११॥

विषमस्थानमाश्रित्य भग्नं यत्स्थापितं सुरैः ।
तत्रस्थानस्थिता देवा भग्नाः पूजाफलप्रदाः ॥१२॥
यद्यथा स्थापितं वास्तु तत्तथैव हि कारयेत् ।
अव्यङ्गं चालितं नृणां दारुणं कुरुते भयम् ॥१३॥
अर्थनश्चालितः प्रज्ञा जीर्णव्यङ्गं च दूषितम् ।
आचार्यैः शिल्पिभिः प्राज्ञैः शास्त्रदृष्ट्या समुद्धरेत् ॥
स्वर्णजं रौप्यजं वापि कुर्यान्नागमथो वृषः ।
तस्य शृङ्गेण दन्तेन पतितं पातयेत्सुधीः ॥१५॥

इति जीर्णोद्धारविधिः ।

तन्तुलं जालकं चैव कीलकं सुशिरं तथा ।
छिद्रसन्धिश्च काणाश्च महादोषा इति स्मृताः ॥१६॥
भिन्नं दोषकरं यस्मात्प्रासादमठमन्दिरम् ।
शिखाभिर्जालकैर्द्वारै रश्मिवातप्रवेशितम् ॥१७॥
ब्रह्मविष्णुशिवार्काणां भिन्नं दोषकरं नहि ।
जिनगौरीगणेशानां गृहं भिन्नं विवर्जयेत् ॥१८॥
व्यक्ताव्यक्तं गृहं कुर्याद् भिन्नं भिन्नानुमूर्तिकम् ।
अथ स्वामिशरीरं स्यात्प्रासादमपि तादृशम् ॥१९॥

इति भिन्नदोषाः ।

भिन्नं चतुर्विधं ज्ञेयमवृद्धामिश्रकं मतम् ।
मिश्रकं पूजितं तत्र भिन्नं वै दोषकारणम् ॥२०॥
छन्दोभेदो न कर्तव्यो जातिभेदस्तथा पुनः ।
उत्पद्यते महामर्म जातिभेदे कृते सति ॥२१॥
द्वारहीने हरेच्चक्षुर्नालहीने धनक्षयम् ।
अपदस्थापिते स्तम्भे महारोगं विनिर्दिशेत् ॥२२॥

स्तम्भव्यासोदये हीने कर्ता तत्र विनश्यति।
प्रासादे पीठहीने तु नश्यन्ति गजवाजिनः ॥२३॥
रथोपरथहीने तु कर्ता तत्र विनश्यति।
प्रासादे पीठहीने तु नश्यन्ति गजवाजिनः ॥२४॥
रथोपरथहीने तु प्रजापीडां विनिर्दिशेत्।
कर्णहीने सुरागारे फलं तत्र न विद्यते ॥२५॥
जङ्घाहीने हरेद्बन्धून् कर्तृकान् कारकादिकान् ।
शिखरे हीनमाने तु पुत्रपौत्रधनक्षयः ॥२६॥
अतिदीर्घे कुलच्छेदो ह्रस्वे व्याधिसमुद्भवः ।
तस्माच्छास्त्रीयमानेन सुखदं सर्वकामदम् ॥२७॥
जगत्यां रोपयेच्छालां शालायां चैव मण्डपम् ।
मण्डपेन च प्रासादो ग्रस्तो वै दोषकारकः ॥२८॥
इति दोषाः।

प्रासादोच्छ्रायविस्ताराज्जगती वामदक्षिणे ।
छायाभेदेन कर्तव्या तथा लिङ्गस्य पीठिका ॥२९॥
जगत्यां त्रिचतुःपञ्चगुणं देवपुरं त्रिधा।
एकद्विवेदसाहस्रहस्तैः स्याद्राजमन्दिरम् ॥३०॥
कलाष्टवेदसाहस्रैर्हस्तै राजपुरं समम्।
दैर्घ्यतुल्यं सपादाष्टं सार्धांशेनाधिकं शुभम् ॥३१॥
द्वादश त्रिपुराणि स्युर्देवस्थानानि चोत्तरं।
षट्त्रिंशत् षट्विवृध्या च यावदेकोत्तरं शतम् ॥३२॥
पुरं प्रासादगेहैः स्यात्सौधैर्जालगवाक्षकैः।
कीर्तिस्तम्भैर्जलारामैर्गेहैर्मण्डैः सुशोभितम् ॥३३॥
इति देवपुरराजपुराणि।

प्रासादस्योत्तरे याम्ये तथाग्नौ पश्चिमेऽपि च ।
यदि नामाश्रमं कुर्यात्सततं द्वित्रिभूमिकम् ॥३४॥
द्विशालं मध्यषट्दारुपट्टशालाप्रशोभितम् ।
मत्तवारणमग्रे च तदूर्ध्वं पट्टभूमिषु ॥३५॥
कोष्ठागारं च वायव्ये वह्निभागे महानसम् ।
पुष्पगेहं तथेशाने नैर्ऋत्येशान्तमायुधम् ॥३६॥
छात्रागारं च पुरतो वारुण्यां च जलाश्रयम् ।
मठस्योपरितः कुर्याद्विद्याव्याख्यानमण्डपम् ॥७३॥
इति मठः ।
पूर्वोक्ता........पुण्याहप्रतिष्ठा सर्वसिद्धिदा ।
रवेः सौम्यायने कुर्याद्देवानां स्थापनादिकम् ॥३८॥
प्रतिष्ठा चोत्तरामूल आर्द्रायां च पुनर्वसौ ।
पुष्ये हस्ते मृगे स्वातौ रोहिण्यां श्रुतिमैत्रभे ॥३९॥
तिथि रिक्तां कुजं धिष्ण्यं क्रूर विधुयुतं तथा ।
दग्धां तिथिं च गण्डान्तं चारभोपग्रहं त्यजेत् ॥४०॥
सुदिने सुमुहूर्ते च लग्ने सौम्ययुतेक्षिते ।
अभिषेकः प्रतिष्ठा च प्रवेशादिकमिष्यते ॥४१॥
प्रासादाग्रे तथैशाने उत्तरे मण्डपं शुभम् ।
त्रिपञ्चसप्तनन्दैकादशविश्वकराननम् ॥४२॥
मण्डपः स्यात्करैरष्टादशसूर्यकलामितैः ।
षोडश हस्ततः कुण्ड वशादधिक इष्यते ॥४३॥
स्तम्भैः षोडशभिर्युक्तं तोरणादिविराजितम् ।
मण्डप वेदिकामध्ये पञ्चाष्टनवकुण्डकम् ॥४४॥
हस्तमात्रं भवेत्कुण्डं मेखलायोनिसंयुतम् ।

आगमैर्वेदमन्त्रैश्च होमं कुर्याद्विधानतः ॥४५
अयुतं हस्तमात्रे च लक्षार्धे तु द्विहस्तकम् ।
त्रिहस्तं लक्षहोमे स्याद्दशलक्षे चतुष्करम् ॥४६॥
विंशलक्षे पञ्चहस्तं कोट्यर्ध षट्करं मतम् ।
अशीतिलक्षेऽद्रिकरं कोटिहोमेऽष्टहस्तकम् ॥४७॥
ग्रहपूजाविधाने च कुण्डमेककरं भवेत् ।
मेखलात्रितयं वेद रामयुग्माङ्गुलैः क्रमात् ॥४८॥
एकद्वित्रिकरं कुर्याद्वेदिकोपरि मण्डलम् ।
ब्रह्मविष्णुरवीनां तु सर्वतोभद्रमिष्यते । ४९॥
भद्रं तु सर्वदेवानां नवनाभिस्तथा त्रयम् ।
लिङ्गोद्भवं शिवस्यापि लतालिङ्गोद्भवं तथा ॥५०॥
भद्रं च गौरीतिलकं देवीनां पूजने हितम् ।
अर्धचन्द्रं तडागेषु चापाकारं तथैव च ॥५१॥
टङ्काभं स्वस्तिकं चैव वापीकूपेषु पूजयेत् ।
पीठिकाजलपादेषु योन्याकारं तु कामदम् ॥५२॥
गजदन्तं महादुर्गे प्रशस्तं मण्डलं भवेत् ।
टङ्काभं चतुरस्रं च गजदन्तमिहायतम् ॥५३॥
विख्यातं सर्वतोभद्रं ज्ञेयान्यन्यानि लोकतः ।
पूर्वादितोरणं प्लक्षयज्ञाङ्गवटपिप्पलैः ॥५४॥
द्वात्रिंशत्षोडशाष्टौ च वृत्तमान् वेदपारगान् ।
कुलीनानङ्गसर्वज्ञान्यज्ञार्थमभिमन्त्रयेत् ॥५५॥
मण्डपस्य त्रिभागेन उत्तरे स्नानमण्डपम् ।
स्थण्डिलं वालुकं कृत्वा शय्यया स्नापयेत्सुरम् ५६॥

पञ्चगव्यैः कषायैश्च वल्कलैः क्षीरवृक्षजैः ।
स्नापयेत्पञ्चकलशैः शतवारं जलेन च ॥५७॥
वेदमन्त्रादिवादित्रगीतमङ्गलनिःस्वनैः ।
वस्त्रेणाच्छादयेद्देवं वेशांनं मण्डपं नयेत् ॥५८॥
तल्पमारोपयेद्बुद्ध्यामुत्तराशले न्यसेत्ततः ।
कलशं तु शिरोदेशे पादस्थाने कमण्डलुम् ॥५९॥
वज्रं वैदूर्यकं मुक्तामिन्द्रनीलं सुनीलकम् ।
पुष्परागं च गोमेदं चंद्रं पूर्वादितो न्यसेत् ॥६०॥
व्यजनं दक्षिणे देशे दर्पणं वामतः शुभम् ।
रत्नन्यासं ततः कुर्याद्दिक्पालादिकपूजनम् ॥६१॥
आग्नेय्यां गणपं विद्यादीशाने ग्रहमण्डलम् ।
नैर्ऋत्ये वास्तुपूजा च वायव्ये मातरः स्मृताः ॥६२॥
वज्रं वैडूर्यकं मुक्तामिन्द्रनीलं सुनीलकम् ।
पुष्परागं च गोमेदं चन्द्रं पूर्वादिषु यजेत् ॥६३॥
सुवर्णं रजतं ताम्रं कांस्यं रीतिं च सीसकम् ।
वङ्गं लोहं च पूर्वादिदिक्षु धातूनिह न्यसेत् ॥६४॥
वज्रं वह्निः सहदेवी विष्णुक्रान्तेन्द्रवारुणी ।
शङ्खिनीज्योतिष्मती चैव स्वशिक्तानि क्रमान्न्यसेत्
यवव्रीहिस्तथा कङ्कुजूर्णाख्या च तिलैर्युता ।
शालिमुद्गाः समाख्याता गोधूमाश्च क्रमेण तु ॥६६॥
यद्देवाभरणं पूजावस्त्रालङ्कारभूषणम् ।
तत्सर्वं शिल्पिने देयमाचार्याय तु याज्ञिकम् ॥६७॥
ततो महोत्सवं कुर्यान्नृत्यगीतैरनेकशः ।
नैवेद्यारार्तिकं पूजामङ्गन्यासादिकं तथा ॥६८॥

क्षीरं क्षौद्रं घृतं खण्डपक्वान्नानि बहून्यपि।
षड्रसाः स्वादुभक्ष्याणि समन्तात्परिकल्पयेत् ॥६९॥
विप्राणां सम्प्रदाणाच्च वेदमन्त्रैस्तथागमैः।
सकलीकरणं जीवन्यासं कृत्वा प्रतिष्ठयेत ॥७०॥
प्रासादे देवतान्यासं स्थावरेषु पृथक्पृथक्।
खरशिलायां च वाराहं पौल्यां नागकुलानि च। ७१
प्रकुम्भे जलदेवाश्च पुष्पके किंसुरास्तथा।
नन्दिनी जाड्यकुम्भे च कल्याण्यां स्थापयेद्धरिम् ॥७२
गणेशं गजपीठे च अश्वपीठे तथाश्विनौ।
नरपीठे नरांश्चैव क्षमां च खुरके यजेत ॥७३॥
भद्रे सिद्धित्रयं कुम्भे पार्वतीं कलशे स्थिताम्।
कपोताल्यां च गन्धर्वान्मञ्चिकायां सरस्वतीम् ॥७४॥
जङ्घायां च दिशापालानिन्द्रमुद्गमसंस्थितम्।
सावित्रीं भरणे देशे शिरावट्यां च देविकाम् ॥७५॥
विद्याधरान् कपोताल्यामन्तराले सुरांस्तथा।
पर्यङ्ककुंठच्छाद्ये च ततो मध्ये प्रतिष्ठयेत् ॥७६॥
शाखयोश्चन्द्रसूर्यौ च त्रिमूर्तिश्चोत्तराङ्गके।
उदुम्बरे स्थितं यक्षमश्विनावर्धचन्द्रके। ७७॥
कौलिकायां धराधारं क्षितिं चोत्रे नृपट्टके।
स्तम्भेषु पर्वतांश्चैवमाकाशं च करोटके ॥७८॥
मध्ये प्रतिष्ठयेद्देवं मकरे जाह्नवीं तथा।
शिखरस्योरुशृङ्गेषु पञ्च पञ्च प्रतिष्ठयेत् ॥७९
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः।
शिखरे चेश्वरं देवं शिखायां तु सुराधिपम् ॥८०॥

ग्रीवायाममरे देवं मण्डपे च निशाकरम् ।
पद्मान्तं पद्मपत्रं च कलशे च सदाशिवम् ॥८१॥
सद्यो वाम अघोरस्तत्पुरुष ईश एवच ।
कर्णादिभद्रपर्यन्तं पञ्चाङ्गे तान् प्रतिष्ठयेत् ॥८२॥
इति स्थावरप्रतिष्ठा ।
प्रथमं देवताहष्टेर्दर्शयेदन्नपर्वतम् ।
विप्रं कुमारिकां वास्तुं ततो लोकान्प्रदर्शयेत् ॥८३॥
ईज्यानन्तरतः कुर्यात्सूत्रधारस्य पूजनम् ।
वस्त्रालङ्कारभूवित्तगोमहिष्याश्ववाहनैः ॥८४॥
अन्येषां शिल्पिनां पूजा कर्तव्या कर्मकारिणाम् ।
स्वाधिकारानुसारेण वस्त्रताम्बूलभोजनैः ॥८५॥
काष्ठपाषाणनिर्माणकारिणो यत्र मन्दिरे ।
भुञ्जते तत्र भोक्तासौ शङ्करस्त्रिदशैः सह ॥८६॥
पुण्यं प्रासादजं स्वामी प्रार्थयेत्सूत्रधारतः ।
सूत्रधारो वदेत् स्वामिन्न क्षयं भवतात् तव ॥८७॥
इति सूत्रधारपूजा ।
आचार्यपूजनं कृत्वा वस्त्रस्वर्णधनैः सह ।
दानं दद्याद्द्विजातिभ्यो दीनान्धदुर्बलेषु च ॥८८॥
सर्वेषां धनमाधारः प्राणिनां जीवनं परम् ।
वित्ते दत्ते प्रतुष्यन्ति मानुष्याः पितरः सुराः ॥८९॥
इति प्रतिष्ठाविधिः ।
प्रतिष्ठा वित्तरागस्य जिनशासनमार्गतः ॥९०॥
नवकारैः सूरमन्त्रैश्च सिद्धिः केवलभाषितम् ।
ग्रहाः सर्वज्ञदेवाश्च पादपीठे प्रतिष्ठिताः ॥९१॥

येनानन्तविभेदेन मुक्तिमार्ग उदाहृतः। ॥९१॥
जिनानां मातरो यत्र यक्षिणी गौतमी तथा।
सिद्धा कालत्रयो जाताश्चतुर्विंशतिमूर्तयः ॥९२॥
इति स्थाप्यं जिनाचारे त्रिप्राकारं गृहं तथा।
सावन्तशिखर?मन्दिरमष्टापदादिकम् ॥९३॥
प्रासादो वीतरागस्य पुरमध्ये सुखावहः।
कल्याणकारिवर्गस्य चतुर्दिक्षु प्रकल्पयेत ॥९४॥

इति जिनप्रतिष्ठा।

माघादिपञ्चमासेषु वापीकूपादि संस्मृतम्।
तडागस्य चतुर्मास कुर्यादाषाढमार्गयोः ॥९५॥
असंस्कृत जलं देवाः पितरो न पिबन्ति ते।
संस्कृते तृप्तिमायान्ति तस्मात्संस्कारमाचरेत् ॥९६॥
जीवनं वृक्षजन्तूनां यः करोति जलाशयम्।
दत्ते वा स लभेत्सौख्यमुर्व्यां स्वर्गे च मानवः ॥९७॥
पुरान्धकवधे रुद्रललाटात्पतितः क्षितौ।
स्वेदस्तस्मात्समुद्भूतं भूतमत्यन्तदुःसहम्। ॥९८॥
गृहीत्वा सहसा देवैर्न्यस्तं भूमावधोमुखम्।
जानुनी कोणयो पादौ रक्षो दिशि शिवे शिरः ॥९९॥
चत्वारिंशद्युता पञ्च वास्तुदेहे स्थिताः सुराः।
देव्योऽष्टौ बाह्यगास्तेषां वसनाद्वास्तुरुच्यते ॥१००॥
अधोमुखेन विज्ञप्तैस्त्रिदशैर्विहितो बलिः।
तेनैव बलिना शान्तिं कुरुते हानिमन्यथा ॥१०१॥
प्रासादभवनादीनां प्रारम्भे परिवर्तने
वास्तुकर्मसु सर्वेषु पूजितः सौख्यदो भवेत् ॥१०२॥

एकपदादितो वास्तु यावत्पदसहस्रकम् ।
द्वात्रिंशन्मण्डलानि स्युः क्षेत्रतुल्याकृतीनि च ।१०३
एकाशीतिपदो वास्तुश्चतुषष्टिपदोऽथवा ।
सर्ववास्तुविभागेषु पूजयेन्मण्डलद्वयम् ॥१०४॥
ईशो मूर्द्धनि पर्जन्यो दक्षिणं कर्णमाश्रितः ।
जयः स्कन्धे महेन्द्राद्याः पञ्च दक्षिणबाहुगाः ।१०५।
महेन्द्रः सूर्यः सत्यश्च भृश आकाशमेव च ।
वायुर्जानुनि पूषाद्याः सप्त पादतले स्थिताः ।१ ६।
पूषा च वितथश्चैव गृहक्षतयमावुभौ ।
गन्धर्वो भृङ्गराजश्च मृगः सप्त सुरा इति ॥१०७॥
पादयोः पितरस्तस्मात्सप्तपादतलस्थिताः ।
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ।१०८
असुरः शोष पापो च रोगो जानुनि संस्थितः ।
अहिर्मुख्यश्च भल्लाटः सोमसर्पौच बाहुगौ ॥१०९॥
अदितिश्चबधोदेशे च वामे कर्णे दितिः स्थितः ।
द्वात्रिंशद्बाह्यगा देवा नाभिपृष्ठे स्थितो विधिः ११
अर्यमा दक्षिणे वामे स्तने तु पृथिवीधरः ।
विवस्वानऽथ मित्रश्च दक्षवामोरुगावुभौ ॥१११॥
रुद्रश्च राजयक्ष्मा च आपवत्सो हृदि स्थितः ।
सावित्रः सविता तद्वत्करं दक्षिणमाश्रितौ ॥११२॥
इन्द्र इन्द्रजयो मेढ्रे भद्रोऽसौ वामहस्तके
मद्रदासोऽपि तत्रैव इति देवमयं वपुः ॥११३॥
ईशाने चरकी बाह्ये पिलिपिच्छस्तु पूर्वतः ।
विदारिकाग्निकोणे च विजृम्भा पाद्दिगास्थिता ११४

नैर्ऋत्यें पूतना स्कन्धे पश्चिमे वायुकोणके।
पापराक्षसिका सौम्येऽर्यमा वै सर्वतोऽर्चयेत्॥ ११५

हेरुकादिबलिर्देयो माषान्नैः सुरयामिषः।
अपरान् वटकान्नैश्च सर्वान् स्वर्णसुगन्धिभिः ११६

इति वास्तुपुरुषन्यासः।

एकेन शास्त्रेण गुणाधिकेन
विना द्वितीये न पदार्थसिद्धिः।
तस्मात्प्रकारान्तरतो विलोक्य
मणीगुणाढ्योऽपि सहायकांक्षी॥

श्रीविश्वकर्मगणनाथमहेशचण्डी —
श्रीविश्वरूपजगदीश्वरसुप्रसादात्।
प्रासादमण्डन मिदं रुचिरं चकार
श्रीमण्डनो गुणवतां भुवि सूत्रधारः।

इति श्रीसूत्रधारमण्डनविरचिते वास्तुशास्त्रे
प्रासादमण्डनेऽष्टमोऽध्यायः॥८॥

इति प्रासादमण्डनं समाप्तम्॥

